॥ हयग्रीव सम्पदास्तोत्रम् ॥

हयग्रीव हयग्रीव हयग्रीवेति वादिनम् ।
नरं मुञ्चन्ति पापानि दरिद्रमिव योषितः ॥ १ ॥

हयग्रीव हयग्रीव हयग्रीव्ति यो वदेत् ।
तस्य निस्सरते वाणी जह्नुकन्याप्रवाहवत् ॥ २ ॥

हयग्रीव हयग्रीव हयग्रीव्ति यो ध्वनिः ।
विशोभते स वैकुण्ठकवाटोद्घाटनक्षमः ॥ ३ ॥

श्लोकत्रयमिदं पुण्यं हयग्रीवपदाङ्कितम् ।
वादिराजयतिप्रोक्तं पठतां सम्पदां पदम् ॥ ४ ॥

॥ इति श्रीमद्वादिराजपूज्यचरणविरचितं हयग्रीवसम्पदास्तोत्रं सम्पूर्णम् ॥